॥ श्रीसुब्रह्मण्यषोडशनामं ॥

सुब्रह्मण्यं प्रणाम्यहं सर्वज्ञं सर्वगंसदा ।
अभीप्सितार्थ सिद्ध्यर्थं प्रवक्ष्येनामषोडशं ॥ १॥

प्रथमोज्ञानशक्त्यात्मा द्वितीयो स्कन्द एवच ।
अग्निभूश्चतृतीयस्यात् बाहुळेयश्चतुर्थकः ॥ २॥

गांगेयः पञ्चमोविद्यात् षष्ठः शरवणोत्भवः ।
सप्तमः कार्तिकेयःस्यात् कुमारस्यादथाष्टकः ॥ ३॥

नवमःषण्मुखश्चैव दशमःकुक्कुटद्वजः ।
एकादशःशक्तिधरो गुहो द्वादश एवच ॥ ४॥

त्रयोदशो ब्रह्मचारी षाण्मातुर चतुर्दशः ।
क्रौञ्चभित् पञ्चदशकः षोडशः शिखिवाहनः ॥ ५॥

एतत् षोडशनामानि जपेत् सम्यक्सदादरं ।
विवाहेदुर्गमे मार्गे दुर्जये च तथैवच ॥ ६॥

कवित्वेच महाशस्त्रे विज्ञानार्थीफलंलभेत् ।
कन्यार्थी लभतेकन्या जयार्थी लभते जयं ॥ ७॥

पुत्रार्थी पुत्रलाभश्च धनार्थी लभते धनं ।
आयुरारोग्य वश्यश्च धनधान्य सुखावहं ॥

॥ इति श्री शङ्करसंहितायां शिवरहस्यखण्डे
श्री सुब्रह्मण्यषोडशनामस्तोत्रं ॥